# अथ सर्वव्याधिहरणविष्णुसहस्रनामविधानम्

तत्र प्रयोगः

- सुमूहूर्ते शिवालयादिषु कृतनित्यक्रियः स्वासने प्राङ्मुख उपविश्य आचम्य प्राणानायम्य देशकालो संकीर्त्य ममामुकव्याधेः समूलनाशद्वारा सद्य आरोग्यार्थं श्रीपरमेश्वरप्रीत्यर्थममुकसंख्यया विष्णुसहस्रनामजपं करिष्ये । इति संकल्प्य
- गणेशस्मरणं कृत्वा
- स्वपुरतः आधारे अन्यलिखितपुस्तकं संस्थाप्य
- गन्धपुष्पादिभिः सम्पूज्य शापविमोचनं पठेत् ।
- **ॐ अस्य श्रीविष्णोः सहस्रनाम्नां रुद्रशापविमोचनमन्त्रस्य महादेवऋषिः, अनुष्टुप्छन्दः, श्रीरुद्रानुग्रहशक्तिर्देवता, सुरेशः शरणं शर्मेति बीजम्, अनन्तो हुतभुग्भोक्तेति शक्तिः, सुरेश्वरायेति कीलकं, रुद्रशापविमोचने विनियोगः ।**

**करन्यासः**

ॐ क्लीं ह्रां अङ्गुष्टाभ्यां नमः

ॐ ह्रीं तर्जनीभ्यां नमः

ॐ ह्रूं मध्यमाभ्यां नमः

ॐ ह्रैं अनामिकाभ्यां नमः

ॐ ह्रौं कनिष्ठिकाभ्यां नमः

ॐ ह्रः करतलकरपृष्ठाभ्यां नमः ।

- इति कर न्यासः । एवमेव हृदयादिन्यासं कृत्वा ध्यायेत्
- **॥ अथ ध्यानम् ॥**

**तमालश्यामलतनुं पीतकौशेयवाससम् ।**

**वर्णमूर्तिमयं देवं ध्यायेन्नारायणं विभुम् ॥ १ ॥**

इति ध्यात्वा मानसोपचारैः सम्पूज्य |

- **ॐ क्लीं ह्रां ह्रीं ह्रूं ह्र ह्रीं ह्रः स्वाहा**
- इति मन्त्रं शतवारं दशवारं वा जप्त्वा किंचिज्जलं क्षिप्त्वा प्रार्थयेत् ॥

ॐ श्रीविष्णोः सहस्रनामस्तव! रुद्रशापविमुक्तो भव

इति प्रार्थ्य सततं तदनन्तरं सहस्रनामपठनं कुर्य्यात् ।

विष्णोः सहस्रनाम्नां यो ह्यकृत्वा शापमोचनम् ।
पठेच्छुभानिसर्वाणि स्युस्तस्य निष्फलानि तु ॥ १ ॥

इति रुद्रशापविमोचनं कृत्वा सद्य आरोग्यतासिद्धये न्यासध्यानोत्तरम् अच्युतानन्तगोविन्देति नामत्रयेण सम्पुटितस्य सहस्रनामस्तवस्य जपः कार्यः ।

अथवा-

**ॐ कृष्णाय वासुदेवाय हरये परमात्मने ।**

**प्रणतक्लेशनाशाय गोविन्दाय नमो नमः ॥ १ ॥**

इत्यनेन –

**ॐ आपदामपहर्तारं दातारं सर्वसम्पदाम् ।**

**लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ॥२॥**

अथवा

**ॐ नमः शम्भवाय च मयोभवाय च नमः शङ्कराय च**

**मयस्कराय च नमः शिवाय च शिवतराय च ॥**

इति मन्त्रेण वा सम्पुटितस्य जपेन सर्वरोगनाशः ॥

**अस्य पुरश्चरणं रोगानुसारेण शतसहस्रमयुतं वा ।**